# सरस्वत्यष्टकम्

अथ श्री सरस्वती स्तोत्रम्
या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना ।
या ब्रह्माच्युतशंकरप्रभृतिभिर्देवैः सदा वन्दिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा १
आशासु राशी भवदंगवल्लि
भासैव दासीकृतदुग्धसिन्धुम्
मन्दस्मितैर्निन्दितशारदेन्दुं
वन्देऽरविन्दासनसुन्दरि त्वाम् २
शारदा शारदाम्बोजवदना वदनाम्बुजे
सर्वदा सर्वदास्माकं सन्निधिं सन्निधिं क्रियात् ३
सरस्वतीं च तां नौमि वागधिष्ठातृदेवताम्
देवत्वं प्रतिपद्यन्ते यदनुग्रहतो जनाः ४
पातु नो निकषग्रावा मतिहेम्नः सरस्वती
प्राज्ञेतरपरिच्छेदं वचसैव करोति या ५
शुक्लां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीं
वीणापुस्तकधारिणीमभयदां जाड्यान्धकारापहाम्
हस्ते स्फाटिकमालिकां च दधतीं पद्मासने संस्थितां
वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम् ६
वीणाधरे विपुलमंगलदानशीले
भक्तार्तिनाशिनि विरिंचिहरीशवन्द्ये
कीर्तिप्रदेऽखिलमनोरथदे महार्हे
विद्याप्रदायिनि सरस्वति नौमि नित्यम् ७
श्वेताब्जपूर्णविमलासनसंस्थिते हे
श्वेताम्बरावृतमनोहरमंजुगात्रे
उद्यन्मनोज्ञसितपंकजमंजुलास्ये

विद्याप्रदायिनि सरस्वति नौमि नित्यम्  ८
मातस्त्वदीयपदपंकजभक्तियुक्ता
ये त्वां भजन्ति निखिलानपरान्विहाय
ते निर्जरत्वमिह यान्ति कलेवरेण
भूवह्निवायुगगनाम्बुविनिर्मितेन  ९
मोहान्धकारभरिते हृदये मदीये
मातः सदैव कुरु वासमुदारभावे
स्वीयाखिलावयवनिर्मलसुप्रभाभिः
शीघ्रं विनाशय मनोगतमन्धकारम्  १०
ब्रह्मा जगत्सृजति पालयतीन्दिरेशः
शम्भुर्विनाशयति देवि तव प्रभावैः
न स्यात्कृपा यदि तव प्रकटप्रभावे
न स्युः कथंचिदपि ते निजकार्यदक्षाः  ११
लक्ष्मिर्मेधा धरा पुष्टिर्गौरी तुष्टिः प्रभा धृतिः
एताभिः पाहि तनुभिरष्टाभिर्मां सरस्वती  १२
सरस्वत्यै नमो नित्यं भद्रकाल्यै नमो नमः
वेदवेदान्तवेदांगविद्यास्थानेभ्य एव च  १३
सरस्वति महाभागे विद्ये कमललोचने
विद्यारूपे विशालाक्षि विद्यां देहि नमोस्तु ते  १४
यदक्षरं पदं भ्रष्टं मात्राहीनं च यद्भवेत्
तत्सर्वं क्षम्यतां देवि प्रसीद परमेश्वरि  १५